अस्यानन्तरं शान्तिपर्व भविष्यति ।

तस्यायमाद्यः श्लोकः—

वैशम्पायन उवाच——

कृतोदकास्ते सुहृदां सर्वेषां पाण्डुनन्दनाः ।
विदुरो धृतराष्ट्रश्च सर्वाश्च भरतस्त्रियः ॥ १

## ॥ इति श्रीमहाभारते *स्त्रीपर्व समाप्तम् ॥

* यद्यप्यादिपर्वणि पर्वसंग्रहकथनावसरे-सप्तविंशतिरध्यायाः पर्वण्यस्मिन्प्रकीर्तिताः । श्लोकसप्तशती चापि पञ्चसप्ततिसंयुता' इत्युक्तम् । अस्मिन्स्त्रीपर्वणि तु अध्यायाः सप्तविंशतिसंख्याका एव, तथापि श्लोकसंख्या तु ८२५ वर्तते, इयं श्लोकवृद्धिः मध्ये मध्ये प्रक्षिप्तश्लोकैः संजाता वेदितव्येति शम् ।

इति श्रीकिञ्जवडेकरकुलकमलदिवाकरसोमयाजिदत्तात्रेयदीक्षिततनुज- पण्डितरामचंद्रशास्त्रिकृतौ महाभारतलघुटिप्पण्यां स्त्रीपर्व समाप्तम् । भारती जयतु । शके १८५३ ।